# श्रीकृष्णभावनामृतम्

## विश्वनाथचक्रवर्तिविरचितम्

नीयल्देल्मानिकोनाम्ना सम्पादितम्

प्रथमसर्गः

श्रीकृष्णचैतन्यघनं प्रपद्ये
सपद्यपध्वस्ततमःप्रपञ्चम् ।
पञ्चेषुकोट्यर्बुदकान्तिधारा-
परम्पराप्यायितसर्वविश्वम्॥ 1

सनातनं रूपमुदीयुषोः क्षितौ
हृदादधानो व्रजकाननेशयोः ।
तत्केलिकल्पागमसङ्गतीलिताः
सदालिवीथीरनुरागिणीर् भजे ॥ 2

तयोर्मिथः पुष्पशराजिचातुरी-
धुरीणता वेदनया विवादिनोः ।
श्रान्तिः स्वयं कापि निमन्त्र्य तत्क्षनान्
निद्रामुपनीय समादधे कलिम् ॥ 3

प्रतिस्वसेवावसरप्रबोधिता
सदातनाभ्यासजुषोऽथ किङ्करीः ।
निद्रैव रात्र्यन्तम् अवेत्य ता जहौ
सैव स्वयं जागरयाञ्चकार किम् ॥ 4

उत्थाय तल्पाच्चकितेक्षणाः क्षणान्
द्रुहानयोर्नागरचक्रवर्तिनोः ।
स्वापं रहः स्वापमभङ्गमङ्गना
आलक्ष्य तूष्णीमधिसय्यमासत ॥ 5

पप्रच्छुरन्योन्यमिमा मिमानया
रसं परिहासभृतं सजृम्भया ।
गिरा चिराज्जागरमूढघूर्णन-
स्वस्वाक्षिभृङ्गीततिलीढवक्षसः ॥ 6

निशान्तसेवोचितमाल्यवीतिका-
कृत्यात्तचित्ता अथ काचिद् आहताः ।
अनङ्गबद्धाङ्गयुवद्वयोच्छलत्-
सौरभ्यसौलभ्यवती रसोच्चला ॥ 7

जानीत जालाध्वगतास्यपद्माः
सद्मान्तराल्य स्वदृशः प्रहित्य ।
कान्तौ नितान्तातनुलास्यचञ्चू
धिनोति सुप्तिः परिरभ्य कीदृक् ॥ 8

इतस्ततोन्यस्तमणिप्रदीपान्
अफुल्लनीलोत्पलचम्पकाभान् ।
विधत्त एतौ स्वमयुखवृन्दैर्
अनावृतैर्मण्डनमाल्यचेलैः ॥ 9

सख्योऽनयोर्नैव विचक्षणा इत्य्-
आक्षिप्य शृङ्गारधुराल्यसौ किम् ।
तत्कल्पिताकल्पशतं निरस्य
स्वलक्ष्मलक्षैर्विदधे विभूषाम् ॥ 10

द्वावेव सम्वेष्ट्य मिथस्तनूद्वयोर्
यत् पीतनीलांशुकतामुपेयतुः ।
तदात्मभूरेव निरास्यदेतयोः
किं पौनरूक्त्या वसने विदूरतः ॥ 11

राधाङ्गराज्यं मदनो यदाग्रहीत्
तदैव लज्जां निजराष्ट्रपालिकाम् ।
शिरोक्षिवक्षःस्वनिशं न्यवासयत्

तां ह्रा सएवाद्य निरस्यति स्म किम् ॥ 12

यत् क्काप्यमूं नैव निभालयामः
सेयं किमस्मा अपराध्यति स्म ।
किम्वास्मदक्ष्णां सुखभोगहेतुर्
मूर्तः शुभादृष्टभरोऽभ्युदेति ॥ 13

स्वपालितं वस्तु तदेधयित्वा
तस्मै समर्प्यान्तरधत्त किम्वा ।
पुनश्च तस्याः सुभगीभवन्त्या
यतो भविष्यत्यतुला समृद्धिः ॥ 14

सकृष्णमेघः स्थिरचञ्चलाली-
वृतोऽतिमाधुर्यरसैरमूः किम् ।
अस्नापयत् स्वार्हणकृत्यवृत्ताः
प्रत्यर्हणेनादित एव धिन्वन् ॥ 15

ताम्बुलमालाविविधानुलेपैर्
अङ्गारधान्यागुरवैश्च धूपैः ।
कालोचितैस्तैः प्रतिपाद्यमानैः
कतिक्षणांस्ता गमयाम्बभूवुः ॥ 16

प्रभञ्जनो रञ्जयितुं निकुञ्ज-
राजौ व्यराजिष्ट मुदा तदानीम् ।
मन्ये प्रबुध्य श्लथदुर्बलाङ्गो
द्रुतं प्रयातुं नतरां शशाक ॥ 17

या वृक्षवल्यो व्यकसंस्तदैव ताश्
चुम्बंस्तदामोदभरैर्दिशोदश ।
प्रसारितैः श्वासपथप्रवेशितैर्
भृंगालीर्जागरयाञ्चकार सः ॥ 18

तद्गुञ्जितै रञ्जितसुस्वरैर्भृशं

प्रबुध्य वृन्दाऽथ विलोक्य सर्वतः ।
स्वनाथयोर्जागरणे पतत्रिणो
न्ययुङ्क्त कालज्ञतया स्यादियम् ॥ 19

अथ प्रबुध्यैव विधूय पक्षान्
ग्रीवाः समुन्नीय चुकूजुरुच्चैः ।
यत्कुक्कुटाः पञ्चषवारमादौ
राधा जजागार तदाप्तबाधा ॥ 20

कृष्णाङ्गसंश्लेषविशेषबाधिनस्
तानेव मत्वेति शशाप सा रुषा ।
अरे परेताशुपरेतराट्पुरं
तत्रैव किं कूजत नो पदायुधाः ॥ 21

विश्लिष्य किंचित् प्रियवक्षसः सा
तूष्णीं स्थितांस्तानुपलभ्य सद्यः ।
संश्लिष्य कान्तं दरनिद्रयैव
निषेव्यमाना पुनरप्यराजीत् ॥ 22

ततः पुनस्तानथ टिट्टिभादीन्
उत्कूजतः प्राह विधूततन्त्रा ।
हंहो क्षमध्वं शयितुं क्षणं मे
दत्तेति सामोटयदङ्गमीषत् ॥ 23

कादंवकारण्डवहंससारसाः
कपोतशारीशुककेकिकोकिलाः ।
जगुः कलं केलिवनीजलस्थल-
प्रचारिणः कृष्णकथामृतोपमम् ॥ 24

प्रबुद्ध्य कान्तौ युगपद्व्यथारुजं
विश्लेषजामूहतुरङ्गमोटनात् ।
चाम्पेयनीलाब्जधनुस्त्विषौ तथा
सान्द्रोपगूहेण मुदं च वक्षसोः ॥ 25

द्वारं समुन्मुच्य मनागनारवं
शनैः पदन्यासविशेषमञ्जुला ।
निर्णीततज्जागरणाथ किङ्करी-
ततिर्विशङ्का प्रविवेश वेश्म सा ॥ 26

तन्मन्दमञ्जीररवैरवैधित-
त्वराभरोत्थातुमना अपि प्रिया ।
पष्पन्द एवातितरां प्रियस्य यत्
दोर्वल्लिमुन्मोचयितुं न साशकत् ॥ 27

वृन्देङ्गितज्ञः सविचक्षणः शुकः
शुको यथा भागवतार्थकोविदः ।
दक्षः प्रबोधे जगतां प्रभोरति-
प्रेमास्पदत्वानुपमः समभ्यधात् ॥ 28

जय स्मराशेषविलासवैदुषी-
निष्णात गोपीजनलोचनामृत ।
प्राणप्रियाप्रेमधुनीमतङ्गज
स्वमाधुरीप्लावितलोकसंहिते ॥ 29

प्रियाधरास्वादसुखे निमज्जसि
प्रबुद्ध्यसे नेत्युचितं रसाम्बुधे ।
रिरंसुतायां विरिरंसुरेव ते
किंचाधुनेयं क्षणदा क्षणन्द्यति ॥ 30

जहीहि निद्रां श्लथयोपगूहनं
व्रजं प्रतिष्ठासुररं प्रभो भव ।
प्रातर्बभूवानुसरस्व चातुरीं
प्रच्छन्नकामत्वमथोररीकुरु ॥ 31

जय व्रजानन्दन नन्दचेतः-
पयोधिपीयूष मयूख देव ।
गोष्ठेश्वरीपुण्यलताप्रसून

प्रयाहि गेहाय धिनुस्व बन्धून् ॥ 32

शारी शुभा साथ जगाद सूक्ष्मधीः
शारी यथा देवनसम्मतस्थितिः ।
जयेश्वरी स्वीयविलाससौभग-
श्रीतर्षितश्रीमुखमुख्ययौवने ॥ 33

शेषेऽधुना यद्रतिवल्लभास्य-
राजीवराजन्मधुपानमत्ता ।
असाम्प्रतं तत्खलु साम्प्रतं ते
प्रातस्ततो जागरयाम्यहं त्वाम् ॥ 34

तन्मा विलम्बस्व भजस्व नीतिं
मा ह्रेपयात्मानमुपेहि गोष्ठम् ।
का शिक्षयेत्त्वामपि लोकरीतिः
त्वत्तो नु ताः शिक्षत एव सर्वाः ॥ 35

कलक्वणत्कङ्कणनूपुरञ्जवाद्-
अत्युच्छलद्गात्रयुगच्छविच्छटम् ।
व्यस्तालकाग्रावलिवेष्टनोन्नमत्-
ताटङ्कहारद्युतिदीपिताननम् ॥ 36

स्रस्तांशुकान्वेषणसम्भ्रमोदयाद्
इतस्ततो न्यस्तकराब्जमञ्जुलम् ।
शय्योत्थितं केलिविलासिनोस्तयोस्
त्रैलोक्यलक्ष्मीमिव संचिकायतत् ॥ युग्मकम् ॥ 37

घूर्णालसाक्षं श्लथसर्वगात्रं
विस्रस्तकेशं रसिकद्वयं तत् ।
भुग्नोपवेशं स्खलने कथंचिद्
अन्योन्यमालम्बनतां प्रपेदे ॥ 38

परस्परांसद्वयदत्तदोर्युग-

न्यस्ताङ्गभारं नतपृष्ठशोभितम् ।
सम्मोटनादुन्मुखमास्यपङ्कज-
द्वयम् परिक्रान्तिमिवानयन्मिथः ॥ 39

तदैव जृभोत्थरदांशजाल-
माणिक्यदीपैर्निरराजयत् किं ।
सनिद्रमुन्मुद्रदृगन्तलक्ष्मी-
रसज्ञयान्योन्यविलिह्यमानं ॥ विशेषकम् ॥ 40

पुनरपि घनघूर्णश्रीमुखद्वन्द्वयोगाद्
अचटुलभुजवल्लीवेष्टनेनेष्टभासौ ।
क्षणमपि दरसुप्त्या शं भजावेत्यतस्ताव्
अनृजुकुसुमतल्पे स्रस्तगात्रावभूताम् ॥ 41

विरहविकलया तच्छय्यया दूनया किं
कथमपि दरलब्धाश्लेषया निद्रया वा ।
उषसि न च विहातुं हन्त शक्तौ खगास्तौ
तदपि विदधुराभ्यां विप्रयुक्तौ स्वनन्तः ॥ 42

इति श्रीकृष्णभावनामृते महाकाव्ये
शय्योत्थानकौतुकास्वादनो नाम प्रथमसर्गः